# माध्यन्दिनक्रमपाठः

## प्रथमो भागः
(पूर्वविंशतिः)



## युधिष्ठिरमीमांसकेन
संपादितः

# माध्यन्दिनक्रमपाठः

## प्रथमो भागः

## ( पूर्वविंशतिः )

युधिष्ठिरमीमांसकेन
सम्पादितः

राष्ट्रिय-वेद-विद्याप्रतिष्ठानेन
दिल्लीस्थ-मोतीलाल-बनारसीदास-पब्लिशर्स्-प्राईवेट-लिमिटेड्-इत्येतेषां
सहयोगेन प्राकाश्यं नीतः

# नैवेद्यम्

को न जानीते वेद-वेदाङ्ग-पापरदृश्वानं पण्डितप्रवरमाचार्ययुधिष्ठिरमीमांसकम् । अस्य जीवनमेव समस्तं वेद-वेदाङ्गमयम् । अनेनैव विद्वद्वरेण्येन कृतभूरिपरिश्रमेण विद्या-महादीपस्तम्भभूतेन नवा आलोकिताः पन्थानोऽनेके निरस्ताश्च प्रवादान्धकारा भूयांसो वेदावेदाङ्गविषया इति नाविदितं विदितवेदितव्यानाम् ।

अस्यैव वेदज्ञशिरोमणेः चिररात्राय चीयमाना उत्तरोत्तरं समेधमानाश्च कल्पना माध्यन्दिन-शाखाक्रमपाठप्रकाशनविषयिण्य इदानीं प्रस्तूयमाने ग्रन्थरत्नाकरे मूर्तिमत्यः फलेग्रहयः संमाह्लादयन्ति मानसं समेषां वेदस्वाध्यायपरायणानाम् ।

सत्यमेवोक्तं स्वभूमिकायां मीमांसकवरेण 'सर्वशाखाध्येतृणां प्रतिष्ठास्थानमपि वाजस-नेयचरणमित्युच्यत' इति। समस्तेऽप्युत्तरभारते वाजसनेयमाध्यन्दिनशाखैव प्राथम्यं लभत इत्यपि सुविदितं नः। यथा संहितापाठः प्रकृतिः पदपाठस्य तथैव क्रमपाठोऽपि प्रकृतिः सर्वेषां विकृतिपाठानामित्यपि सुविज्ञातं सम्प्रदायविदाम्। इत्येवं द्वयोरपि

प्रतिष्ठास्थानयोः (वाजसनेयचरणप्रमुखाया माध्यन्दिनसंहितायाः समस्तविकृतिपाठ-प्रकृतिभूताया माध्यन्दिन-क्रमपाठपरम्परायाश्च) पण्डितमीमांसकप्रवरेण, ग्रन्थेऽस्मिन्नेकत्र सन्निवेशं विधाय, वेदस्वाध्यायपरम्परा-संरक्षणविधेरनुत्तमं निदर्शनं प्रास्तावीति मोमुदीति नश्चेतः ।

निखिलमपि राष्ट्रियवेदविद्याप्रतिष्ठानकुलमनुगृहीतं श्रीयुधिष्ठिरमीमांसकस्य संपादक-शिरोमणेरनेन परमोपयोगिना प्रकाशनेन।

आशासे प्रकाशनमिदमभिनन्दिष्यन्ति वेदस्वाध्यायपरायणा वेदविद्याव्रताश्च सुधिय इति ।

किरीटो जोशी

# माध्यन्दिन-संहितायाः क्रमपाठः

महाभाष्यकारेण भगवता पतञ्जलिना शब्दप्रयोगविषयं निदर्शयता पस्पशाह्निक उक्तम्—

"चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्नाः। एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽऽथर्वणो वेदः।"

तदेवम् अध्वर्युसम्बन्धिनो यजुर्वेदस्य एकशतम् अर्थाद् एकोत्तरशतं शाखाः सन्ति। सहस्रमार्गी सामवेदः, सहस्रशाखीय इत्येके मन्यन्ते, अपरे तु सामवेदस्य त्रयोदशैव शाखाः, सामगानं तु सहस्रमार्गीयमित्याहुः। बह्वृचानामाम्नायस्य ऋग्वेदस्य एकविंशतिः शाखाः, अथर्ववेदस्य नव शाखाः।

सामवेदस्य सहस्रं शाखाः स्वीक्रियन्ते चेच्चतुर्णामपि वेदानामाहत्य ११३१ शाखाः सम्पद्यन्ते। तत्रैकेऽस्यां संख्यायां चतुर्णां वेदानां मूलभूताश्चतस्रः संहिता अपि सङ्कलिताः सन्ति, ता न्यूनीकृत्य ११२७ चतुर्णां वेदानां शाखा मन्वते।

तत्र यजुर्वेदः शुक्लकृष्णभेदेन द्विधा भिन्नः। शुक्लयजुर्वेदस्य पञ्चदश शाखाः, कृष्णयजुर्वेदस्य षडशीतिरिति चरणव्यूहादिषु परिगण्यन्ते।

शुक्लकृष्णनाम्नोर्विषये विप्रवदन्ते वैदिकाः। अस्मन्मते तु तत्र भगवता कृष्णद्वैपायनेन स्वशिष्याय वैशम्पायनाय या

यजु:संहिता प्रोक्ता, सा प्रवक्तुः 'कृष्ण'-नामसंबन्धात् कृष्णयजुरिति व्यपदेशमलभत। अनन्तरं वैशम्पायनेन 'चरक' इत्यपरनामधेयेन या संहिता प्रोक्ता, सा तच्छिष्यैः प्रशिष्यैश्च प्रवचन-भेदेन बहुधा भिन्ना । एवं सर्वा अपि षडशीतिः शाखाः कृष्णयजुर्नाम्ना प्रसिद्धिं गताः। वैशम्पायनस्य 'चरक' नामसंयोगात् सर्वासां कृष्णयजुः-शाखानामध्येतारश्चर-काश्चरकाध्वर्यवाश्च अभिधीयन्ते।

वाजसनीपुत्रो याज्ञवल्क्यः प्रथमं वैशम्पायनस्य शिष्योऽ-भूत्। अनन्तरं कस्मिंश्चिद् विषये विग्रहे समुत्पन्ने स वैश-म्पायनस्य शिष्यत्वमपहाय आदित्यायनानां कस्माच्चिद् गुरोः सकाशाद् यजुर्वेदमधिजगौ। तदधीता यजु:संहिता कृष्णप्रतिपक्षीभूतेन शुक्लनाम्ना प्रसिद्धिं गता। कृष्णयजुषि मन्त्रब्राह्मणयोः संमिश्रीभावत्वमपेक्ष्य शुक्लयजुषि मन्त्र-ब्राह्मणभागयोः पार्थक्यात् शुद्धत्वात् शुक्लनाम्ना प्रसिद्धिं गता इत्येके मन्यन्ते। भगवता याज्ञवल्क्येन स्वयं शतपथान्ते स्व-प्रोक्तायाः संहितायाः शुक्लविशेषणेन निर्देशः कृतः। तथाहि—"आदित्यानीमानि शुक्लानि यंजूषि वाजसनेयेन याज्ञवल्क्ये-नाख्यायन्ते ।"

तत्र भगवता याज्ञवल्क्येन स्वगुरोः सकाशाद् अधीता शुक्लयजु:संहिता जाबालप्रभृतिभ्यः पञ्चदशशिष्येभ्योऽ-ध्यापिता। तैश्च पुनरपरेभ्यः स्वशिष्येभ्यः प्रवचनमकारि। एवं च प्रवचन-भेदेनैकैव शुक्लजयु:संहिता पञ्चदशभेदमवाप्ता। एताः पञ्चदश शाखाः स्वस्वप्रवक्तृनाम्ना[१] प्रसिद्धिं गताः। आसां सर्वासां शाखानां मूलभूता वाजसनेयसंहिताऽभूद्

१. आख्या प्रवचनात् । मीमांसा १।१।३० ॥

इत्यत एताः सर्वा वाजसनेयसंहितानाम्नाऽपि स्मर्यन्ते। सर्वशाखाध्येतॄणां प्रतिष्ठास्थानमपि वाजसनेयचरणमित्युच्यते ।

चरणव्यूहेषु, प्रतिज्ञापरिशिष्टे, वायुब्रह्माण्डपुराणयोः, काण्वशाखायाः सायणभाष्योपोद्घाते एषां ग्रन्थानां हस्तलेखेषु च पञ्चदशशाखानां विविधानि नामान्युपलभ्यन्ते। आहत्य सर्वनामानि चतुर्विंशतिसंख्याकानि भवन्ति[१]। सत्येवं शुक्लयजुषां पञ्चदशैव शाखा इति सर्वजनीया प्रसिद्धिः। कात्यायननाम्ना प्रसिद्धेषु अष्टादशपरिशिष्टेषु स्तो द्वे चरणव्यूहप्रतिज्ञापरिशिष्टाख्ये[१] परिशिष्टे। अनयोर्यानि पञ्चदशनामानि स्मर्यन्ते तानीमानि—

१.जाबालाः,[२] २. बौधेयाः, ३. काण्वाः, ४. माध्यन्दिनाः (माध्यन्दिनीयाः), ५. शापेयाः, ६. तापायनीयाः, ७. कपोलाः (कापोताः), ८. पौण्ड्रवत्साः, ९. आवटिकाः १०. परमावटिकाः, ११. पाराशराः (पाराशर्याः), १२. वैनधेयाः, १३. गालवाः, १४. कात्यायनाः (कात्यायनीयाः), १५. वैजवापाः (वैजवापनीयाः)।

१. द्र०–पं० भगवद्दत्तविरचितस्य "वैदिक वाङ्मय का इतिहास" नाम्नो ग्रन्थस्य "वेद की शाखाएँ" नाम्नि प्रथमे भागे पृष्ठ २१०–२२२ (नवम्बर १९७८)।

१. प्रतिज्ञापरिशिष्टनामनी द्वे परिशिष्टे कात्यायननाम्ना प्रसिद्धे। तत्रैकं प्रातिशाख्यस्य परिशिष्टम् । इह स्मृतं तु श्रौतसूत्रस्य परिशिष्टात्मकेष्वष्टादशपरिशिष्टेष्वन्यतमं ज्ञेयम् ।

२. इमानि नामानि न शाखाग्रन्थानाम्, अपि तु "छन्दोब्राह्मणानि च तद्विषयाणि" (अष्टा० ४।२।६६) नियमेन तत्तच्छा-

एषु चतुर्थैकादश–चतुर्दश–पञ्चदशसंख्याकेषु नामसु प्रत्ययभेदमात्रं भेदः।सप्तमे नाम्नि यो भेदः स लेखकप्रमादरूपः सम्भवति। अत्र ''कपोताः'' इत्येव शुद्धं नाम स्यात्।

शुक्लयजुषः पञ्चदशशाखासु सम्प्रति द्वे एव शाखे उपलभ्येते। एका माध्यन्दिनी, अपरा काण्वी। कात्यायनी–शाखायाः केवलं शतपथब्राह्मणस्य एको हस्तलेखः चतुर्थ–काण्डात्मको होशियारपुरस्थे पुस्तकालये वर्तते। कात्यायनीयं प्रातिशाख्यं तु ''पदप्रकृतीनि सर्वचरणानां पार्षदानि'' (निरुक्त १।१७) इति वचनाद् वाजसनेयचरणान्तर्गतानां सर्वासां पञ्चदशशाखानां समानम् । श्रौतगृह्ये अपि सर्व–शाखासम्बन्धिनी इति वैदिकैः स्वीक्रियते ।

---

खाध्येतृणां वाचकानि । जाबालेन प्रोक्तां शाखामधीयते, ते जाबालाः । एवं सर्वत्र ज्ञेयम् ।

तत्रोत्तरभारते माध्यन्दिनशाखाया एव एकच्छत्रं साम्राज्यं वर्तते। गुर्जरमहाराष्ट्रयोरपि प्रदेशयोरियं शाखा पठ्यते । काण्वशाखायास्तु उत्कलेषु दक्षिणे भारते एव च सम्प्रति प्रचारो वर्तते।

**पञ्चदशशाखासु माध्यन्दिनी मुख्या मूलरूपा सर्व–साधारणी च**

मद्रासराजकीयहस्तलेखपुस्तकालये अस्त्येको हस्तलेख आद्यन्तभाग–विहीनोऽनिर्ज्ञातनामा। हस्तलेखानां सूची–पत्रनिर्मात्रा वास्तविकनाम्नोऽविज्ञातत्वात् ''माध्यन्दिन–शाखाविषयः'' इति सांकेतिकनाम्नाऽयं निर्दिष्टः (द्र.–सूचीपत्र, भाग ३, पृष्ठ ३४२६)।अस्य सम्पूर्णस्य हस्तलेखस्य आद्यन्तयोर्यः पाठो निर्दिष्टः, तत्रेत्थं पाठ उपलभ्यते—

अथ पञ्चदशशाखासु माध्यन्दिनशाखा मुख्येति वेदित-व्या । ... तथा च होलीरभाष्यम्[१]—

यजुर्वेदस्य मूलं हि भेदो माध्यन्दिनीयकः ।
सर्वानुक्रमणी तस्याः कात्यायनकृता तु सा ॥

तस्मान्माध्यन्दिनीयशाखा एव पञ्चदशसु वाजसनेयशाखासु मुख्या सर्वसाधारणी च। अतएव वसिष्ठेनोक्तम्—

माध्यन्दिनी तु या शाखा सर्वसाधारणी तु सा।

इति वशिष्ठस्योक्तवचनं प्रतिज्ञासूत्र-परिशिष्टस्य[२] भाष्यकृता अनन्तदेवेनापि १।३ सूत्रभाष्य इत्थं निर्दिष्टम्—

अत एवोक्तं वसिष्ठेन—माध्यन्दिनी तु या शाखा सर्व-साधारणी हि सा।

मुख्या—माध्यन्दिनशाखाया मुख्यत्वं तु पञ्चदश-शाखास्वस्यैव सम्पूर्णे उत्तरभारते व्याप्तत्वान् निर्विवादम् ।

## यजुर्वेदस्य मूलभूतता सर्वसाधारणता च

अस्ति माध्यन्दिनशाखाया नवमेऽध्याये चत्वारिंशत्तम एको मन्त्रः—"एष वोऽमी राजा" (राजसूये राजपुरोहितः प्रजा उद्दिश्य ब्रवीति—हे अमी प्रजाः। एष कृताभिषेको राजाऽस्ति। अत्र प्रजायाः सम्बोधनार्थम् "अमी" इति सामान्यं पदं निर्दिष्टमस्ति। तत्र पञ्चदशसु शाखासु याऽपरा शाखोपलभ्यते, तत्रायं पाठः—

एष वः कुरवो राजैष वः पञ्चाला राजा।
—काण्व सं. ११।१ ॥

१. होलीरभाष्यं याजुषसर्वानुक्रमण्या वर्तते ।
२. इदं प्रतिज्ञापरिशिष्टं शुक्लयजुःप्रातिशाख्ये वर्तते । बहोः कालात् प्राक् काश्यां मुद्रितस्य सभाष्यप्रातिशाख्यस्यान्ते मुद्रितमभूत् । सम्प्रति नोपलभ्यते ।

काण्वशाखायाः कुरुदेशे पञ्चालदेशे च प्रचार आसीत्। अतस्तयोर्देशयोः प्रजाया "हे कुरवः प्रजाः, हे पञ्चालाः प्रजा व एष राजा" इति विशेषेण कुरवः पञ्चालाश्च पठिताः। एतेन माध्यन्दिन-शाखायाः सर्वसाधारणता मूलता च हस्तामलकवत् स्पष्टा । कृष्णयजुःशाखास्वपि विशिष्टदेशीयाः प्रजास्तत्तन्नाम्ना स्मर्यन्ते। तथाहि—

तैत्तिरीयसंहितायाम्—एष वो भरता राजा। १।८।९० ॥

मैत्रायणीसंहितायाम्—एष ते जनते राजा। २।६।९४ ॥

काठकसंहितायाम्—एष ते जनते राजा १५। ७ ॥

तैत्तिरीयसंहिताया भरतानां देशे प्रचाराद् भरता राजा इत्युक्तम्। मैत्रायणीसंहितायाः कठसंहितायाश्च यत्र प्रचार आसीत् तत्र जनतन्तत्वाज्जनता एव प्रत्यक्षं सम्बोधिता।

**माध्यन्दिनशाखाया मूलत्वेऽपरं कारणम्**

माध्यन्दिनसंहितायां पुनरुक्तमन्त्राणां द्विधा पाठो दृश्यते। केचन पुनरुक्तमन्त्राः सकलपाठेन पठ्यन्ते, अपरे प्रतीक-निर्देशेन। अस्य द्विरूपपाठस्य किं कारणमिति विचारे कृते विज्ञायते—ये पुनरुक्ता मन्त्राः सकल-पाठेन पठ्यन्ते ते शुक्लयजुषोऽङ्गभूताः सन्ति, ये च प्रतीकेन कर्मविशेषे विनियोगार्थं पुनः पठ्यन्ते ते प्रतीकरूपेण स्मर्यन्ते । सत्येवम् इदं शक्यते वक्तुम् अस्याः शाखायाः प्रवक्त्रा कर्मविशेषे स्मरणाय येषां मन्त्राणाम् आवश्यकताऽनुभूता ते स्वगुरुणा याज्ञवल्क्येन प्रोक्तायां संहितायां प्रतीकरूपेण निर्दिष्टाः। अनेन प्रयत्नेन माध्यन्दिनिना स्वगुरुणा याज्ञवल्क्ये-नोपदिष्टा यजुःसंहिता अप्यक्षुण्णरक्षिता, कार्यकाले चापे-क्ष्यमाणानां मन्त्राणां तत्तत्स्थाने स्मरणाय प्रतीकरूपेण

निदर्शिता । सम्भवत इदमेव कारणं स्याद् येन होलीरभाष्ये माध्यन्दिनशाखाया मूलत्वमुक्तम्।

**मन्त्रपाठस्य संरक्षणाय विशिष्टा उपायाः**

अस्मत्पूर्वजैर्मन्त्रपाठस्य यथावत् संरक्षणाय विविधा उपाया विहिताः। ते च याजुषचरणव्यूहे इत्थं निर्दिष्टाः—

मन्त्रः पदः क्रमश्चैव चतुर्थं स्याज्जटा तथा ।
क्रम-माला-शिखा-रेखा ध्वजो दण्डो रथो घनः ॥
अष्टौ विकृतयः प्रोक्ता क्रमपूर्वा मनीषिभिः।—द्वितीयखण्डे

अत्र मन्त्रः "परः सन्निकर्षः संहिता" (अष्टा. १।४।१०९) इत्येवं संहितया पठनीयो भवति। पदपाठे प्रतिपदं संहिता विच्छिद्य पठ्यते। परन्तु पदकारैरर्थावबोधनार्थं प्रगृह्यावग्रहादयो विशेषा अपि पदपाठे निदर्शिताः। पदपाठस्य प्रकृतिः संहितापाठः, तत्प्रसूत्वात् पदपाठस्य। क्रमपाठे पदपाठानुसारं द्वे द्वे पदे यथाक्रमं संयुज्य पठ्यन्ते। यथा—

इषेत्वा।त्वोर्जे।ऊर्जेत्वा।त्वावायवः।वायवस्थ इत्येवमादि।

एवं च क्रमपाठस्य प्रकृतिः पदपाठः। जटाद्या घनान्ता या विकृतयः तासां क्रमपाठः प्रकृतिः। एवं च त्रय आद्याः पाठाः प्रकृतिरूपा जटाद्याश्च विकृतयः। जटादीनामष्टानां विकृतीनां लक्षणानि व्याडिप्रभृतिभिराचार्यै-र्विकृति-वल्ल्यादिषु निर्दिष्टानि।

ये वैदिकाः संहितां, पदपाठं, क्रमपाठं च गुरुपरम्परया-ऽधीयते ते वैदिकेषु "त्रिपाठी" इत्यास्पदभागिनो भवन्ति। ये विकृतीरप्यधीयते ते "घनान्तपाठिनः" इत्येवं स्मर्यन्ते।

माध्यन्दिनसंहिता वैदिकानां पाठानुसारं यथायथं केषुचिदेव स्थानेषु मुद्रिता। आधिक्येन अस्याः संहिताया मुद्रण-

मर्धजरतीयन्यायमनुसरति। नैव तासां 'परः सन्निकर्षः संहिता'-रूपो न च पदच्छेदरूपः। न चासु यथालक्षणं व्यञ्जनानां द्वित्वमुपलभ्यते, न चानुस्वारस्य परसावर्ण्यं दृश्यते। एतादृशो विकृतः पाठः प्रथमं पाश्चात्त्यैः प्रवर्तितः। गतानुगतिकतया परम्परानभिज्ञैर्बाहुल्येनानुसर्यते।

**पदपाठः**—अस्याः संहितायाः पदपाठः पुरा काश्यां मुम्बय्यां च मुद्रितमभूत्। उभे अपि संस्करणे बहोः कालादनुपलब्धे आस्ताम्। २०१८ वैक्रमाब्दे अजयमेरु (अजमेर) मण्डलान्तर्गत-केकड़ीनगरनिवासिना वेदमूर्तिना श्रीमदनमोहनव्यासविदुषा एकं १४७१ वैक्रमाब्दे लिखितमतिपुरातनं पदपुस्तकमानीय मह्यं प्रदत्तम्। एनमतिदुर्लभं हस्तलेखं प्राप्य मया अस्य प्रकाशनस्य निश्चयो व्यधायि। अनेकनगरेभ्यो हस्तलेखानां संकलनं निधाय सम्पादनं कृत्वा २०२८ वैक्रमाब्देऽस्य सुन्दरं शुद्धं च संस्करणं प्रकाशितम्।

पदपाठे यानि पदानि मन्त्रा वा पुनरायान्ति ते लुप्यन्ते अर्थात्र तानि पुनः पठ्यन्ते। अतएव बहुत्र संहितायाः कण्डिकासंख्यया सह पदपाठस्य कण्डिकासंख्या भिद्यते।

**क्रमपाठः**—यतः क्रमपाठस्य प्रकृतिः पदपाठः, अतएव पदपाठे यानि पदानि लुप्यन्ते तानि क्रमपाठेऽपि न पठ्यन्ते। पदपाठे यथानिर्दिष्टे द्वे द्वे पदे संयोज्य पठ्यन्ते। अनुवाकान्ते यदन्तिममेकाकिपदमवशिष्यते तस्यैव द्विपाठः क्रियते। यथा—पशून् पाहि। पाहीति पाहि। हव्यं रक्ष। रक्षेतिरक्ष। अनुवाकान्तर्गतानां कण्डिकानामन्तिमं पदम् उत्तरकण्डिकाया आद्येन पदेन संयुज्यते। यथा—ह्वार्षीच्छतधारम्। अधुक्षः सा।

**क्रमपाठस्योपयोगिता**—क्रमपाठ एव उत्तरासां विकृतीनां प्रकृतिः। अतः क्रमपाठमेवाधारीकृत्य जटाद्या विकृतयः प्रवर्तन्ते। अपि च क्रमपाठान्नान्यत् पदं क्वचित् प्रक्षेप्तुं शक्यते पदान्तरं वा क्वचित् कल्पयितुं शक्यते।

**क्रमपाठस्य कः प्रवक्ता**—माध्यन्दिनक्रमपाठस्य कः प्रवक्तेति न कथमपि ज्ञायते, क्रमपाठान्ते कस्यापि नाम्नोऽदर्शनात्। ऋग्वेदस्य क्रमपाठस्य प्रवक्ता बाभ्रव्यः पाञ्चालो गालव आसीदिति महाभारताद् विज्ञायते। तथाहि—

पाञ्चालेन क्रमः प्राप्तस्तस्माद् भूतात् सनातनात्।
बाभ्रव्यगोत्रः स बभूव प्रथमं क्रमपारगः॥
नारायणाद् वरं लब्ध्वा प्राप्य योगमनुत्तमम्।
क्रमं प्रणीय शिक्षां च प्रयणयित्वा स गालवः॥

—शान्ति. ३४२।१०३, १०४

ऋक्प्रातिशाख्ये(११।६५)ऽपि गालवः प्रथमः क्रमप्रवक्ता बभूव इत्युक्तम् —"इति प्र बाभ्रव्य उवाच च क्रमं क्रमप्रवक्ता प्रथमं शशंस च।"

आभ्यां प्रमाणाभ्यां विज्ञायते यत् पञ्चालदेशीयेन बाभ्रव्यगोत्रेण गालवेन ऋग्वेदस्य प्रथमं क्रमपाठस्य प्रवचनमकारीति।

पदक्रमयोरध्ययनव्यवस्थाया आरम्भो भगवतः पाणिनेः प्रागेव बभूव। एतएव पाणिनिना क्रमादिभ्यो वुन् (अष्टा. ४।२।६१) सूत्रेण पदमधीते वेद वा पदकः[1], क्रममधीते वेद

१. क्रमादिगणे "पद" शब्दोऽपि पठ्यते। क्रमापेक्षया पदपाठस्य अध्ययनं प्रथमं क्रियते, ततः क्रमपाठस्य। भगवता पाणिनिना "पदादिभ्यो वुन्" इत्यनुक्त्वा "क्रमादिभ्यो वुन्" इति सूत्रं प्रणीतम्, तस्य रहस्यं तु देवा ज्ञातुमर्हन्ति।

वा क्रमकः इति पदे अन्वाख्याते। अपि च "अध्ययनतोऽपिप्रकृष्टाख्यानाम्" (अष्टा. २।४।५) सूत्रेण ययोरध्ययनेऽव्यवधानं भवति तेषां द्वन्द्व एकवद् भवतीत्युक्तम। अस्य सूत्रस्य काशिकायां "पदकक्रमकं" इत्युदाहरणं निर्दिष्टम्।[1]

**क्रमपाठस्य द्वैविध्यम्**—क्रमपाठस्यापि पदपाठस्येव द्विविधः पाठः । प्रथमे पाठे यथालक्षणं पदान्तर्गतं व्यञ्जनं द्विः पठ्यते, अपरे पाठे निमित्तविशेषे एव क्वचिद् व्यञ्जनस्य द्विः पाठः। अस्माभिः पदपाठे उभे अपि पाठे मुद्रिते। इत्थमेव क्रमपाठेऽपि द्वैविध्यं ज्ञेयम्।

**क्रमपाठस्य प्रकाशनस्याभिलाषः**— पदपाठस्य प्रकाशनानन्तरं क्रमपाठस्य प्रकाशने ममेच्छा समुत्पन्ना।

१. इदानीन्तने दयानन्दसरस्वतीस्वामिनाऽपि संस्कारविधौ पठनपाठनव्यवस्थायां पदक्रमसहितं वेदानामध्ययनमुक्तम्।

अतः क्रमपाठस्य हस्तलेखप्राप्त्यर्थं नासिकक्षेत्रादीनि स्थानानि गत्वा प्रयत्नोऽकारि, परन्तु पण्डितानां क्षुद्रवृत्त्या तत्र साफल्यं न प्राप्तम्। अनन्तरं 'केकड़ी'-निवासिना पण्डितप्रवरेण मदनमोहनव्यासेन अन्विष्य क्रमपाठस्य पूर्वार्धस्यैको हस्तलेखः प्रेषितः। मया पण्डितमहाभागाः सूचिता यावत् कृत्स्नस्य क्रमपाठस्य हस्तलेखो न प्राप्यते, प्रकाशनं न सम्भवति। वर्षद्वयानन्तरं समग्रस्य क्रमपाठस्य हस्तलेखोऽन्विष्य सम्प्रेषितः। एतस्मिन् काले मम स्वास्थ्यं नितरां नष्टम्, मम सहधर्मचारिणी अपि दिवंगता, द्रव्यप्राप्तिमार्गोऽपि विच्छिन्नः। अतो विगतेषु चतुःपञ्चेषु वर्षेषु क्रमपाठस्य प्रकाशने समर्थो नाभवम्। गच्छति कालेऽकस्माद् देहलीस्थराष्ट्रियवेदविद्याप्रतिष्ठानस्य अध्यक्षैस्तत्रभवद्भिः किरीटजोशिमहाभागैः सह सम्पर्कः समभवत्। वेदविद्या-

रक्षणतत्परैर्जोशिमहाभागैरस्य प्रकाशने रुचिः प्रदर्शिता। वैदिकग्रन्थानां सस्वरप्रकाशनस्य व्यवस्थाया अभावाद् हस्तलेखस्यैव प्रतिच्छायारूपेण प्रकाशनस्य निश्चयःकृतः।

यावत्यो वेदसंहिता उपलभ्यन्ते तासु द्वित्रिवर्जमन्यासां पदपाठानां तु मुद्रणं समभूत्, परन्तु क्रमपाठस्यैकस्याप्यद्य यावन् मुद्रणं नाभूत्। एतन्महत्कार्यसिद्धये महता परिश्रमेण क्रमपाठस्य हस्तलेखप्रदातॄणां वेदमूर्त्तीनां श्रीमदनमोहन-व्यासमहाभागानां शुभाशंसनं करोमि, तथैव वेदविद्याप्रचाराय प्रयतमानानां जोशिमहाभागानामपि धन्यवादं विदधामि।

प्रकाश्यमानोऽयं क्रमपाठस्य हस्तलेखो वैदिककुला-दुपलब्धः पठनपाठने व्यवहृतत्वात् प्रायेण शुद्धो वर्तते। अयं हस्तलेखः पूर्वार्धोत्तरार्धयोर्द्वयोर्भागयोर्विभक्तो वर्तते। उभयो-रपि भागयोर्लेखकौ भिन्नौ स्तः।

पूर्वार्धस्यान्तेऽयं पाठ उपलभ्यते—"इति वाजसनेय-संहितायां क्रम विंशतितमोऽध्याय ॥ २० ॥ इमम्मे ॥ शके १७९२॥ साधारणनामसंवत्सरे ज्येष्ठमासे शुक्लपक्षे ससंयाम् गुरुवासरे ॥ तद्दिने समाप्तम् ॥ शुभं भवतु ॥ श्री ॥"

उत्तरार्धान्ते—"शके १७२४ दुन्दुभिनामाऽब्दे उदगयने ग्रीष्मर्त्तौ ज्येष्ठे मासे कृष्णपक्षे अष्टम्यां सौम्यवासरे तद्दिने भृगुपुरस्थे त्र्यम्बकात्मज सदाशिवदेव ब्राह्मण गुरु सान्निध्ये लिखितं समाप्तं ॥६॥"

यत उपलब्धे हस्तलेखे यथालक्षणं व्यञ्जनानां द्वित्वं नोपलभ्यते, अतो वैदिकानां यो मुख्यो व्यञ्जनद्वित्वरूपः तस्य प्रदर्शनाय तथाविधपाठस्य द्वे पृष्ठे मुद्र्येते।

विदुषां वशंवदो
**युधिष्ठिरो मीमांसकः**

ओ३म्

# यजुःक्रमपाठसंहिता

## प्रथमोध्यायः

॥ ओ३म् ॥ इषेत्त्वा । त्वोर्ज्जे । ऊर्ज्जेत्त्वा । त्वावायवः । वायवस्स्थ । स्स्थदेवः । देवोवः । वःसविता । सविताप्प्र । प्प्रार्प्पयतु । अर्प्पयतुश्श्रेष्ठतमाय । श्रेष्ठतमायकर्म्मणे । श्रेष्ठतमायेतिश्रेष्ठ तमाय । कर्म्मणऽआ । आप्प्यायद्ध्वम् । प्यायद्ध्वमघ्न्याः । अघ्न्याऽइन्द्राय । इन्द्रायभागम् । भागम्प्रजावतीः । प्रजावतीरनमीवाः । प्रजावतीरितिप्रजा व्वतीः । अनमीवाऽअयक्ष्माः । अयक्ष्मामा । मावः । वस्स्तेनः । स्स्तेनऽईशत । ईशतमा । माघशंसः । अघशंसोद्ध्रुवाः । अघशंसऽइत्त्यघ शंसः । ध्रुवाऽअस्स्मिन् । अस्स्मिन्-न्गोपतौ । गोपतौस्स्यात । गोपताविति गो पतौ । स्स्यातबह्वीः । बह्वीर्य्यजमानस्य । यजमानस्यपशून् । पशून्पाहि । पाहीतिपाहि ॥१॥

वसोः पवित्रम् । पवित्रमसि । असिद्यौः । द्यौः पृथिवी । पृथिवीमातरिश्वनः । मातरिश्वनो घर्मः । घर्मोऽविश्वधाः । विश्वधाः परमेण । विश्वधा इति विश्व धाः । परमेण धाम्ना । धाम्ना-दृꣳहस्व । दृꣳहस्व मा । माह्वाः । ह्वार्मा । माते । ते यज्ञपतिः । यज्ञपतिर्ह्वार्षीत् । यज्ञपतिरिति यज्ञ पतिः । ह्वार्षीच्छतधारम् ॥२॥ शतधारꣳसहस्रधारम् । शतधारमिति शत धारम् । सहस्रधारन्देवः । सहस्रधारमिति सहस्र धारम् । देवस्त्वा । त्वा सविता । सविता पुनातु । पुनातु वसोः । वसोः पवित्रेण । पवित्रेण शतधारेण । शतधारेण सुप्वा । शतधारेणेति शत धारेण । सुप्वा काम् । सुप्वेति सु प्वा । कामधुक्षः । अधुक्षःसा ॥३॥ सा विश्वायुः । विश्वायुर्विश्वकर्मा । विश्वायुरिति विश्व आयुः । विश्वकर्मा विश्वधायाः । विश्वकर्मेति विश्व कर्मा । विश्वधाया इन्द्रस्य । विश्वधाया इति विश्व धायाः । इन्द्रस्य त्वा । त्वा भागम् । भागꣳसोमेन । सोमेनातनच्मि । आतनच्मि । तनच्मि विष्णो । विष्णो हव्यम् । विष्णा इति विष्णो । हव्यꣳरक्ष । रक्षेति रक्ष ॥४॥

# माध्यन्दिन-क्रमपाठः

## पूर्व विंशतिः

### प्रथमो भागः प्रारंभः



एका।क्षरवकारस्य।निपातस्थो।यदा।भवेत्॥ संहितायांलघुर्जातःप
दकाले गुरुर्भवेत्॥१॥ इति माध्यंदिनी।शिक्षायां॥

पुर्ज्ञे १

ॐ ॥श्रीगणेशायनमः॥ ॥हरिः ॐ॥ इषेत्वा। त्वोर्ज्जे। ऊर्ज्जेत्वा। त्वावायवः। वा

॥१॥ यवस्थ। स्थदेवः। देवोवः। वःसविता। सविताप्र। प्रार्प्पयतु। अर्प्पयतु

श्रेष्ठतमाय। श्रेष्ठतमायकर्म्मणे। श्रेष्ठतमायेतिश्रेष्ठ। तमाय। कर्म्म

णऽआप्यायध्वम्। आ प्यायध्वम्। प्यायध्वमघ्न्याः। अघ्न्याऽइन्द्रा

यइन्द्रायभागम्। भागम्प्रजावतीः। प्रजावतीरनमीवाः। प्रजा

वतीरितिप्रजावतीः। अनमीवाऽअयक्ष्माः। अयक्ष्मामा। मावः

वस्तेनः। स्तेनऽईशत। ईशतमा। माघशंसः। अघशंसोध्रुवाः। अ ॥१॥

घशंसऽइत्यघ। शंसः। ध्रुवाऽअस्मिन्। अस्मिन्गोपतौ। गो

पतौ स्यात । गोपताविति गो । पतौ । स्यात बह्वीः । बह्वीर्यजमानस्य । य
जमानस्य पशून् । पशून्पाहि । पाहीति पाहि ॥१॥ वसोः पवित्रम् । प
वित्रमसि । असि द्यौः । द्यौः पृथिवी । पृथिवी मातरिश्वनः । मातरि
श्वनो घर्मः । घर्मो विश्वधाः । विश्वधाः परमेण । विश्वधा इति वि
श्वधाः । परमेण धाम्ना । धाम्ना दृंहस्व । दृंहस्व मा । मा ह्वाः ।
ह्वार्मा । मा ते । ते यज्ञपतिः । यज्ञपतिर्ह्वार्षीत् । यज्ञपतिरिति य
ज्ञपतिः । ह्वार्षीच्छतधारम् ॥२॥ शतधारꣳ सहस्रधारम् । शत
धारमिति शत । धारम् । सहस्रधारं देवः । सहस्रधारमिति सह

क० स्र॑।धारम्।देवस्त्वा।त्वासविता।सविता पुनातु।पुनातुवसोः।वसोः

॥२॥ पवित्रेण।पवित्रेणशतधारेण।शतधारेणसुप्वा।शतधारेणेतिश॒

त॒।धारेण।सुप्वाकाम्।सुप्वेतिसु।प्वा।काम् अधुक्षः।अधुक्षःसा॥३॥सा मं३

विश्वायुः।विश्वायुर्विश्वकर्म्मा।विश्वायुरितिविश्व।आयुः।विश्व

कर्म्माविश्वधायाः।विश्वकर्म्मेतिविश्व।कर्म्मा।विश्वधायाऽइन्द्र

स्य।विश्वधायाऽइतिविश्व।धायाः।इन्द्रस्यत्वा।त्वाभागम्।भाग

ँ सोमेन।सोमेनातनच्मि।आतनच्मि।तनच्मिविष्णो।वि ॥२॥

ष्णोहव्यम्।विष्णोऽइतिविष्णो।हव्यँ रक्ष।रक्षेतिरक्ष॥४॥अग्ने

व्रतपते।व्रतपते व्रतम्।व्रतपत ऽइति व्रतऽपते।व्रतञ्चरिष्यामि।च

रिष्यामितत्।तच्छकेयम्।शकेयन्तत्।तन्मे।मेराध्यताम्।राध्यतामिद

म्।इदमहम्।अहमनृतात्।अनृतात्सत्यम्।सत्यमुपैऽउपैमि। ए

मिकः॥५॥कस्त्वा।त्वायुनक्ति।युनक्तिसः।सकस्मै।कस्मैतस्मै।त

स्मैकर्मणे।कर्मणेवाम्।वाम्वेषाय।वेषायवाम्।वाम्प्रत्युष्टम्॥६॥प्रत्यु

ष्टꣳरक्षः।प्रत्युष्टमितिप्रति।उष्टम्।रक्षः प्रत्युष्टाः।प्रत्युष्टाऽअरातयः।

प्रत्युष्टाऽइतिप्रति।उष्टाः।अरातयोनिष्टप्तम्।निष्टप्तꣳरक्षः।निस्त

प्तमितिनिः।तप्तम्।रक्षोनिष्टप्ताः।निष्टप्ताऽअरातयः।निस्तप्ताऽइ

ऋ॰ स्तो। धारम्। देवस्त्वा। त्वा सविता। सविता पुनातु। पुनातु वसोः। वसोः
॥२॥ पवित्रेण। पवित्रेण शतधारेण। शतधारेण सुप्वा। शतधारेणेति श-
त। धारेण। सुप्वाकाम्। सुप्वेति सु। प्वा। काम् धुक्षः। अधुक्षः सा॥३॥ सा मं ३
विश्वायुः। विश्वायुर्विश्वकर्मा। विश्वायुरिति विश्व। आयुः। विश्व-
कर्मा विश्वधायाः। विश्वकर्मेति विश्व। कर्मा। विश्वधायाऽइन्द्र-
स्य। विश्वधायाऽइति विश्व। धायाः। इन्द्रस्य त्वा। त्वा भागम्। भाग-
ꣳ सोमेन। सोमेनातनच्मि। आतनच्मि। तनच्मि विष्णो। वि- ॥२॥
ष्णो हव्यम्। विष्णोऽइति विष्णो। हव्यꣳ रक्ष। रक्षेति रक्ष॥४॥ अग्ने

व्रतपते। व्रतपते व्रतम्। व्रतपत ऽ इति व्रतऽपते। व्रतञ्चरिष्यामि। च
रिष्यामि तत्। तच्छकेयम्। शकेयन्तत्। तन्मे। मे राध्यताम्। राध्यतामिद
म्। इदमहम्। अहमनृतात्। अनृतात्सत्यम्। सत्यमुपैमि। उपैमि। ५
मि कः॥५॥ कस्त्वा। त्वा युनक्ति। युनक्ति सः। स कस्मै। कस्मै तस्मै। त
स्मै कर्मणे। कर्मणे वाम्। वाम्वेषाय। वेषाय वाम्। वाम्प्रत्युष्टम्॥६॥ प्रत्यु
ष्टं रक्षः। प्रत्युष्टमिति प्रतिऽउष्टम्। रक्षः प्रत्युष्टाः। प्रत्युष्टा ऽअरातयः।
प्रत्युष्टा ऽइति प्रतिऽउष्टाः। अरातयो निष्टप्तम्। निष्टप्तं रक्षः। निस्त
प्तमिति निः। तप्तम्। रक्षो निष्टप्ताः। निष्टप्ता ऽअरातयः। निस्तप्ता ऽइ

ऋ० तिविंः। तैस्ताः। अरातयः। उरु। उरु। अन्तरिक्षम्। अन्तरिक्षमनु। अन्वेमि। एमि।
॥३॥ धूः॥७॥ धूरसि। असि धूर्व। धूर्व धूर्वन्तम्। धूर्वन्तं धूर्व। धूर्व धूर्वन्तम्। तं यः। यो
स्मान्। अस्मान् धूर्वति। धूर्वति तम्। तं धूर्व। धूर्व यम्। यं वयम्। व यु
धूर्वामः। धूर्वामो देवानाम्। देवानामसि। असि वह्नितमम्। वह्नितमꣳ स
स्नितमम्। वह्नितममिति वह्नि॑ऽतमम्। सस्नितमं पप्रितमम्। सस्नि
तममिति सस्नि॑ऽतमम्। पप्रितमं जुष्टतमम्। पप्रितममिति पप्रि॑ऽतमम्।
तमम्। जुष्टतमं देवहूतमम्। जुष्टतममिति जुष्ट॑ऽतमम्। देवहूतममह्रुतम् ॥३॥
तमम्। देवहूतममिति देव॑ऽहूतमम्॥८॥ अह्रुतमसि। असि हविर्धानम्।

हविर्द्धानम्विष्णुः। हविर्द्धानमितिहविःऽधानम्। विष्णुस्त्वा। त्वाक्रम
ताम्। क्रमतामुरु। उरुवाताय। वातायापहतम्। अपहतंरक्षः। अ
पहतमित्यपऽहतम्। रक्षोयच्छन्ताम्। यच्छन्तांपञ्च। पञ्चेतिपञ्च॥९॥
देवस्यत्वा। त्वासवितुः। सवितुःप्रसवे। प्रसवेश्विनोः। प्रसवइति
प्रऽसवे। अश्विनोर्बाहुभ्याम्। बाहुभ्यांपूष्णः। बाहुभ्यामितिबाहुऽ
भ्याम्। पूष्णोहस्ताभ्याम्। हस्ताभ्यामग्नये। अग्नयेजुष्टम्। जुष्टंगृ
ह्णामि। गृह्णाम्यग्नीषोमाभ्याम्। अग्नीषोमाभ्याम्जुष्टम्। जुष्टंगृह्णा
मि। गृह्णामिभूताय॥१०॥ भूतायत्वा। त्वानारातये। नारातये। अरातयेस्वः।

क्र०

॥४॥ स्वरभिविख्येषम्। अभिविख्येषन्दृꣳहन्ताम्। अभिविख्येषमित्यभि।
विख्येषम्। दृꣳहन्तान्दुर्याः। दुर्याः पृथिव्याम्। पृथिव्यामुरु। उर्व
न्तरिक्षम्। अन्तरिक्षमनु। अन्वेमि। एमि पृथिव्याः। पृथिव्यास्त्वा।
त्वा नाभौ। नाभौ सादयामि। सादयाम्यदित्याः। अदित्या ऽउ
पस्थे। उपस्थेऽग्ने। उपस्थ ऽइत्युपऽस्थे। अग्ने हव्यम्। हव्यꣳ रक्ष। र
क्षेति रक्ष॥११॥ पवित्रे स्थः। पवित्रे ऽइति पवित्रे। स्थो वैष्णव्यौ। वै
ष्णव्यौ सवितुः। सवितुर्वः। वः प्रसवे। प्रसव ऽउत्। प्रसव ऽइति
प्रऽसवे। उत्पुनामि। पुनाम्यच्छिद्रेण। अच्छिद्रेण पवित्रेण। पवित्रेण ॥५॥

णस्व । सूर्यस्य र श्मिभिः । रश्मिभिर्देवीः । रश्मिभिरिति
रश्मि।भिः । देवीरापः । आपोऽअग्रेगुवः । अग्रेगुवोऽअग्रेपुवः ।
अग्रेगुवऽइत्यग्रे।गुवः । अग्रेपुवोऽग्रे । अग्रेपुवऽइत्यग्रे।पुवः । अग्र
ऽइमम् । इममद्य । अद्य यज्ञम् । यज्ञं नयत । नयताग्रे । अग्रे यज्ञपं
तिम् । यज्ञपतिꣳ सुधातुम् । यज्ञपतिमिति यज्ञ।पतिम् । सुधातुं यज्ञ
पतिम् । सुधातुमिति सु।धातुम् । यज्ञपतिं देवयुवम् । यज्ञपतिमि
ति यज्ञ।पतिम् । देवयुवं युष्माः । देवयुवमिति देव।युवम् ॥१२॥ यु
ष्माऽइन्द्रः । इन्द्रोऽवृणीत । अवृणीत वृत्रतूर्ये । वृत्रतूर्ये यूयम् । यू

ॐ

॥५॥ त्रतूर्य्यऽइतिवृत्र।तूर्य्ये।यूयमिन्द्रम्।इन्द्रमवृणीध्वम्।अवृणीध्वंवृ
त्रतूर्य्ये।वृत्रतूर्य्येप्रोक्षिताः।वृत्रतूर्य्यऽइतिवृत्र।तूर्य्ये।प्रोक्षिता
स्थ।प्रोक्षिताऽइतिप्र।उक्षिताः।स्थाग्नये।अग्नयेत्वा।त्वाजुष्टम्।
जुष्टम्प्र।प्रोक्षामि।उक्षाम्यग्नीषोमाभ्याम्।अग्नीषोमाभ्यान्दैव्या
य।दैव्यायकर्म्मणे।कर्म्मणेशुन्धध्वम्।शुन्धध्वन्देवयज्यायै।देवय
ये ज्यायैयत्।देवयज्यायाऽइतिदेवऽयज्यायै।यद्वः।वोऽशुद्धाः।अशुद्धाःपराज
घ्नुः।पराजघ्नुरिदम्।पराजघ्नुरितिपरा।जघ्नुः।इदंवः।वस्तत्।त
च्छुन्धामि।शुन्धामीतिशुन्धामि॥१३॥शर्म्मासि।अस्यवधूतम्।अवधू ॥५॥

नुः। रक्षः॥ अवधूतमित्यव। धूतम्। रक्षोऽवधूताः। अवधूताऽअरातयः।
अवधूताऽइत्यव। धूताः। अरातयोऽदित्याः। अदित्यास्त्वक्। त्वगसि।
असि प्रति। प्रति त्वा। त्वाऽदितिः। अदितिर्वेत्तु। वेत्त्वद्रिः॥ अद्रिरसि। अ-
सि वानस्पत्यः। वानस्पत्यो ग्रावा। ग्रावासि। असि पृथुबुध्नः। पृथुबुध्नः
प्रति। पृथुबुध्नऽइति पृथु। बुध्नः॥ प्रति त्वा। त्वाऽदित्याः। अदित्यास्त्वक्।
त्वग्वेत्तु। वेत्त्वग्नेः॥ ३४॥ अग्नेस्तनूः। तनूरसि। असि वाचः। वाचो वि-
सर्जनम्। विसर्जनं देववीतये। विसर्जनमिति वि। सर्जनम्। देव-
वीतये त्वा। देववीतयऽइति देव। वीतये। त्वा गृह्णामि। गृह्णामि बृहद्ग्रा-

ॐ० ॥६॥ वा।बृहद्ग्रावासि।बृहद्ग्रावेति बृहत्ऽग्रावा।असि वानस्पत्यः सः।वानस्प
त्यः सः।सऽइदम्।इदं देवेभ्यः।देवेभ्यो हविः।हविः शमीष्व।शमीष्व सु
शमि।सुशमि शमीष्वेति सुशमि ष्व।सुशमि शमीष्व।सुशमीति सु।शमि।शमीष्व ह
विष्कृत्।सुशमीष्वेति सुशमि ष्व।हविष्कृदेहि।हविः कृदिति हविःऽकृत्।एहि
इहि।कुक्कुटः॥१५॥कुक्कुटोऽसि।असि मधुजिह्वः।मधुजिह्वऽइषम्।
मधुजिह्वऽइति मधु।जिह्वः।इषमूर्जम्।ऊर्जमाव द।आवद।त्व
दत्वया।त्वया वयम्।वयꣳ संघातꣳ संघातम्।संघातꣳ संघातञ्जेष्म।संघा
तꣳ संघातमिति संघातम्।संघातम्।जेष्म वर्षवृद्धम्।वर्षवृद्धमसि। ॥६॥

र्षेऽ॒द्धमिति वर्षे । वृद्धम् । असि । प्रति । प्रति त्वा । त्वा वर्षवृद्धम् । वर्षवृद्ध
म्वेत्तु । वर्षवृद्धमिति वर्ष । वृद्धम् । वेत्तु । सं । परापूतम् । परापूतं रक्षः । परा
पूतमिति परा । पूतम् । रक्षः । परापूताः । परापूताऽअरातयः । परापूता
इति परा । पूताः । अरातयोऽपहतम् । अपहतं रक्षः । अपहतमित्यप ।
हतम् । रक्षो वायुः । वायुर्वः । वो वि । वि विनक्तु । विनक्तु देवः । देवो वः ।
वः सविता । सविता हिरण्यपाणिः । हिरण्यपाणिः प्रति । हिरण्यपाणिरि
ति हिरण्य । पाणिः । प्रति गृभ्णातु । गृभ्णात्वच्छिद्रेण । अच्छिद्रेण पाणिना । ६२
पाणिनेति पाणिना ॥ १६ ॥ धृष्टिरसि । अस्यप । अपाग्ने । अग्नेऽग्निम् । अग्नि

क्र०
॥७॥ ग्निमामादम्। आमादं जहि। आमादमित्याम्। अदम्। जहि निः। नि
ष्क्रव्यादम्। क्रव्यादं सेध। क्रव्यादमिति क्रव्य। अदम्। सेधा देवय
आदेवयजम्। जम्। देवयजं वह। देवयजमिति देव। यजम्। वह ध्रुवम्। ध्रुवमसि।
असि पृथिवीम्। पृथिवीं दृंह। दृंह ब्रह्मवनि। ब्रह्मवनि त्वा। ब्र
ह्मवनीति ब्रह्म। वनि। त्वा क्षत्र वनि। क्षत्रवनि सजातवनि। क्षत्रव
नीति क्षत्र। वनि। सजातवन्युप। सजातवनीति सजात। वनि। उप द २
धामि। दधामि भ्रातृव्यस्य। भ्रातृव्यस्य वधाय। वधायाग्ने॥१७॥ अ
ग्ने ब्रह्म। ब्रह्म गृभ्णीष्व। गृभ्णीष्व धरुणम्। धरुणमन्तरिक्षम्। अ ॥७॥

न्तरिक्षन्धर्त्रम् । धर्त्रन्दिवम् । दिवन्दृꣳह । दृꣳह विश्वाभ्यः । विश्वाभ्यस्त्वा । त्वाशा-
भ्यः । आशाभ्य ऽउप । उप दधामि । दधामि चितः । चितस्स्थ । स्थोर्द्ध्वचि-
तः । ऊर्द्ध्वचितो भृगूणाम् । ऊर्द्ध्वचित ऽइत्यूर्द्ध्वऽचितः । भृगूणामङ्गिर-
साम् । अङ्गिरसान्तपसा । तपसा तप्यद्ध्वम् । तप्यद्ध्वमिति तप्यद्ध्वम् ॥
॥ १८ ॥ धिषणासि । असि पर्वती । पर्वती प्रति । प्रति त्वा । त्वादित्याः ।
आदित्यास्त्वक् । त्वग्वेत्तु । वेत्तु दिवः । दिवस्स्कम्भनीः । स्कम्भनीरसि ।
असि धिषणा । धिषणासि । असि पार्वतेयी । पार्वतेयी प्रति । प्र-
ति त्वा । त्वा पर्वती । पर्वती वेत्तु । वेत्तु धान्यम् ॥ १९ ॥ धान्यमसि । अ-

ऋ० ॥९॥ सिधिनुहि।धिनुहि देवान्।देवान्प्राणाय।प्राणायत्वा।त्वोदानाय।उ
दानायव्यानाय।उदानायेत्युत्।आनाय।व्यानायदीर्घाम्।व्यानाये
तिवि।आनाय।दीर्घामनु।अनुप्रसितिम्।प्रसितिमायुषे।प्रसिति
मितिप्र।सितिम्।आयुषेधाम्।धाम्वर्च्चसे।चक्षुषेत्वा।त्वामहीनाम्
ना। महीनाम्पयः।पयोसि।अ सीत्यसि॥१०॥संवपामि।वपाम्यापः।आपः
ओषधीभिः।ओषधीभिरोषधयः।ओषधयोरसेन।रसेनरेवतीः।रे
वतीर्ज्जगतीभिः।जगतीभिः पृच्यन्ताम्।पृच्यन्ताम्मधुमतीः।म
धुमतीर्म्मधुमतीभिः।मधुमती रितिमधु।मतीः।मधुमतीभिः ॥९॥

२ म ती पृच्यन्ताम्।मधुमतीभिरितिमधुऽम ।तीभिः।पृच्यन्ताम्।जनयत्यै॥२१॥ज
नयत्यैत्वा।त्वासम्।संयौमि।यौमि।इदम्।इदमग्नेः।अग्नेरिदम्।इदम
ग्नीषोमयोः।अग्नीषोमयोरिषे।इषेत्वा।त्वाघर्मः।घर्मोसि।असि
विश्वायुः।विश्वायुरुरुप्रथाः।विश्वायुरितिविश्वऽआयुः।उरुप्रथाऽ
उरु।उरुप्रथाऽइत्युरु।प्रथाः।उरुप्रथस्व।प्रथस्वोरु।उरुते।तेयज्ञ
पतिः।यज्ञपतिःप्रथताम्।यज्ञपतिरितियज्ञ।पतिः।प्रथतामग्निः।अ
ग्निष्टे।तेत्वचम्।त्वचम्मा।माहिंसीत्।हिंसीद्देवः।देवस्त्वा।त्वासवि
ता।सविताश्रपयतु।श्रपयतुवर्षिष्ठे।वर्षिष्ठेधि।अधिनाके।नाकऽ

क्र० ॒तिनाकैं॥२२॥मा भेः।भेर्म्मा।मा सम्।सं विक्थाः।विक्था अतमेरुः।अ
॥६॥ तमेरुर्यज्ञः।यज्ञोतमेरुः।अतमेरुर्यजमानस्य।यजमानस्य प्रजा।प्रजा
भूयात्।प्रजेति प्रजा।भूयात्त्रिताय।त्रिताय त्वा।त्वा द्विताय।द्वितायै
कताय।एकतायेत्यैकताय॥२३॥आददेऽध्वरकृतम्।अध्वर
कृतन्देवेभ्यः अध्वरकृतमित्यध्वर।कृतम्।देवेभ्यऽइन्द्रस्य।इन्द्र
स्य बाहुः।बाहुरसि।असि दक्षिणः।दक्षिणः सहस्रभृष्टिः।सह
स्रभृष्टिः शततेजाः।सहस्रभृष्टिरिति सहस्र।भृष्टिः।शततेजा
वायुः।शततेजा इति शत।तेजाः।वायुरसि।असि तिग्मतेजाः।द्वि ॥६॥

ग्म तेजा द्विषुतः। तिग्मतेजा इति तिग्मतेजाः। द्विषतो बधः। बधः पृथि
वि॥ २४॥ पृथिवि देवयजनि। देवयजन्योषध्याः। देवयजनीति देव
यजनि। ओषध्यास्ते। ते मूलम्। मूलम्मा। मा हिंसिषम्। हिंसिषं
व्रजम्। व्रजं गच्छ। गच्छ गोष्ठानम्। गोष्ठानं वर्षतु। गोस्थानमिति गो
स्थानम्। वर्षतु ते। ते द्यौः। द्यौर्बधान। बधान देव। देव सवितः। सवि
तः परमस्याम्। सवितरिति सवितः। परमस्यां पृथिव्याम्। पृथिव्यां
शतेन। शतेन पाशैः। पाशैर्यः। योऽस्मान्। अस्मान्द्वेष्टि। द्वेष्टि यम्। यं
च। च वयम्। वयं द्विष्मः। द्विष्मस्तम्। तमतः। अतो मा। मा मौक्। मौ

क्रा०

॥१०॥ गर्य॥२५॥ अपारऽरुम्। अररुम्पृथिव्यै। पृथिव्यै देवयजनात्। देवय
जनाद्वध्यासम्। देवयजनादिति देवऽयजनात्। वध्यासमग्ने॥ अर २२
रो दिवम्। अररोऽइत्यररो। दिवम्मा। मा पप्तः। पप्तो द्रप्सः। द्रप्सस्ते।
ते द्याम्। द्याम्मा। मा स्कन्। स्कन्गायत्रेण॥२६॥ गायत्रेण त्वा। त्वा
छन्दसा। छन्दसा परि। परि गृह्णामि। गृह्णामि त्रैष्टुभेन। त्रैष्टुभेन जा
गतेन। त्रैष्टुभेनेति त्रैऽस्तुभेन। जागतेन सु क्ष्मा। सुक्ष्मा च। चासि
असि शिवा। शिवा च। चासि। असि स्योना। स्योना सुखदा। सु
खदोर्जस्वती। सुखदेति सुऽखदा। ऊर्जस्वती पयस्वती। पयस्व ॥३०॥

तीति पर्यस्व ती ॥ २७ ॥ पुरा क्रूरस्य । क्रूरस्य विसृपः । विसृपो विर

प्शिन् । विसृप इति वि । सृपः । विरप्शिन् उदादाय । विरप्शिन्निति

विरप्शिन् । उदादाय पृथिवीम् । उदादायेत्युत्‌ । आदाय । पृथिवी

जीवदानुम् । जीवदानुमिति जीव । दानुम् । यामैरयन् । ऐरयंश्चन्द्रम

सि । चन्द्रमसि स्वधाभिः । स्वधाभिस्ताम् । तामु धीरासः । उं इ त्युंधी

रासो ऽअनुदिश्य । अनुदिश्य यजन्ते । अनुदिश्येत्यनु । दिश्य । य

जन्त ऽइति यजन्ते । प्रोक्षणीरासादय । प्रोक्षणीरिति प्र । उक्षणीः । आ

सादय । सादय द्विषतः । द्विषतो वधः । वधोसि । असीसि ॥ २८ ॥ अ

क्र०
॥३३॥ निशितोसि। अनिशित ऽइत्यनिःशितः। असिसपत्नक्षित्। सपत्नक्षि
द्वाजिनम्। सपत्नक्षिदिति सपत्न।क्षित्। वाजिनन्त्वा। त्वावाजेध्या
यै। वाजेध्यायैसम्। वाजेध्याया ऽइति वाज ऽइध्यायै। सम्मार्ज्मि।
मार्ज्मि। निशिता। अनिशितासि। अनिशितेत्यनि।शिता। असिस
पत्नक्षित्। सपत्नक्षिद्वाजीनीम्। सपत्नक्षिदिति सपत्न।क्षित्।
वाजिनीन्त्वा। त्वावाजेध्यायै। वाजेध्यायैसम्। वाजेध्याया ऽइति
वाज ऽइध्यायै। सम्मार्ज्मि। मार्ज्मि॥ २९॥ अदित्यैरास्ना। रास्ना
सि। असिविष्णोः। विष्णोर्वेष्पः। वेष्पोसि। अस्यूर्जे। ऊर्जेत्वा। ॥३३॥

त्वादृष्टेन। अदृष्टेन त्वा। त्वा चक्षुषा। चक्षुषाव। अवपश्यामि। पश्या
म्यग्नेः। अग्नेर्जिह्वा। जिह्वासि। असि सुहूः। सुहूर्देवेभ्यः। सुहूरि
ति सुऽहूः। देवेभ्यो धाम्ने धाम्ने। धाम्ने धाम्ने मे। धाम्ने धाम्नऽइ
ति धाम्ने। धाम्ने। मे भव। भव यजुषे यजुषे। यजुषे यजुषे सवितुः। य
जुषे यजुषऽइति यजुषे। यजुषे॥ ३०॥ सवितुस्त्वा। त्वा तेजः। तेजोसि।
असि शुक्रम्। शुक्रममृतम्। अमृतन्धाम। धाम नाम। नाम प्रियम्। प्रिय
न्देवानाम्। देवानामनाधृष्टम्। अनाधृष्टन्देवयजनम्। देवयजनमसि।
देवयजनमिति देवऽयजनम्। असीत्यसि॥ ३१॥ ॥इति वाजसनेत्रिपद

क्र०
॥५२॥ क्रमसंहितायांप्रथमोध्यायः॥१॥ ॥कृष्णोसि।अस्याखरेष्ठः।आ
खरेष्ठोग्नये।आखरेस्थऽइत्याखरेस्थः।अग्नयेत्वा।त्वाजुष्टम्।जुष्ट
म्प्र।प्रोक्षामि।उक्षामिवेदिः॥वेदिरसि।असिबर्हिषे।बर्हिषेत्वा।त्वाजुष्ट
म्।जुष्टम्प्र।प्रोक्षामि।उक्षामिबर्हिः।बर्हिरसि।असिस्रुग्भ्यः।स्रुग्भ्य
स्त्वा।स्रुग्भ्यऽइतिस्रुक्।भ्यः।त्वाजुष्टम्।जुष्टम्प्र।प्रोक्षामि।उक्षाम्य
दित्यै॥१॥अदित्यैव्युन्दनम्।व्युन्दनमसि।व्युन्दनमितिवि।उन्दनम्।अ
सिविष्णोः।विष्णोस्तुपः।स्तुपोसि।अस्यूर्णम्रदसम्।ऊर्णम्रदस ॥६२॥
न्त्वा।ऊर्णम्रदसमित्यूर्णम्रदसम्।त्वास्तृणामि।स्तृणामिस्वासस्था

भूः । स्वाससस्थां देवेभ्यः । आस्था सस्थामिति स । आऽस्थाम् । देवेभ्यो भुवप स
तये । भुवपतये स्वाहा । भुवपतय इति भुव । पतये । स्वाहा भुवनपत
ये । भुवनपतये भूतानाम् । भुवनपतय इति भुवन । पतये । भूतानांप
तये । पतये गन्धर्वः ॥ २ ॥ गन्धर्वस्त्वा । त्वा विश्वावसुः । विश्वावसुः परि
विश्ववसुरिति विश्व । वसुः । परिदधातु । दधातु विश्वस्य । विश्वस्या
रिष्ट्यै । अरिष्ट्यै यजमानस्य । यजमानस्य परिधिः । परिधिरसि ।
परिधिरिति परि । धिः । अस्यग्निः । अग्निरिडः । इडऽई डितः ।
ईडित इन्द्रस्य । इन्द्रस्य बाहुः । बाहुरसि । असि दक्षिणः । दक्षिणो वि

ॐ०२

॥१३॥ त्रावरुणौ।मित्रावरुणौत्वा।त्वोत्तरतः।उत्तरतःपरि।परिधत्ताम्।ध्रु
त्ताम्ध्रुवेण।ध्रुवेणधर्म्मणा।धर्म्मणेतिधर्म्मणा॥३॥वीतिहोत्रन्त्वा।
वीतिहोत्रमितिवीतिऽहोत्रम्।त्वाकवे।कवेद्युमन्तम्।द्युमन्तꣳस
म्।द्युमन्तमितिद्युऽमन्तम्।समिधीमहि।इधीमहीतीधीमहि।अ
ग्नेबृहन्तम्।बृहन्तमध्वरे।अध्वरऽइत्यध्वरे॥४॥समिदसि।समि
दितिसम्ऽइत्।असिसूर्य्यः।सूर्य्यस्त्वा।त्वापुरस्तात्।पुरस्तात्पा
तु।पातुकस्याः।कस्याश्चित्।चिदभिशस्त्यै।अभिशस्त्यैसवि ॥१३॥
तुः।अभिशस्त्याऽइत्यभिऽशस्त्यै।सवितुर्बाहू।बाहूस्थः।बाहूऽइ

तिबाहू । स्युरूर्णम्रदसम् । ऊर्णम्रदसन्त्वा । ऊर्णम्रदसमिस्यूर्ण ।
म्रदसम् । त्वास्तृणामि । स्तृणामि स्वासस्थम् । स्वासस्थन्देवेभ्यः ।
स्वासस्थमिति सु । आसस्थम् । देवेभ्यः ऽ ॐ त्वा । स्त्वा । त्वा वसवः । व अ० २
सवो रुद्राः । रुद्रा ऽ आदित्याः । आदित्याः सदन्तु । सदन्त्विति सद
न्तु ।। ५ ।। घृताच्यसि । असि जुहूः । जुहूर्नाम्ना । नाम्ना सा । से
दम् । इदं प्रियेण । प्रियेण धाम्ना । धाम्ना प्रियम् । प्रियं सदः । सद
सदः ऽ आसीद । आसीद । सीदोपभृत् । उपभृद्ध्रुवा । उपभृदित्युप ।
भृत् । ध्रुवा । ध्रुवा । ध्रुवा ऽ असदन् । असदन् सदन्नृतस्य । ऋतस्य यो

ॐ०२
॥३४॥ मौ। यो नो नोता। ना विक्तो। वि स्तो पाहि। विस्तो ऽइति वि स्तो। पाहि पाहि।
पाहि यज्ञम्। यज्ञम्पाहि। पाहि यज्ञपतिम्। यज्ञपतिम्पाहि। यज्ञपतिमि
ति यज्ञ पतिम्। पाहि माम्। मां यज्ञन्युम्। यज्ञन्युमिति यज्ञ न्युम्। ह्॥
अग्ने वाजजित्। वाजजिद्वाजम्। वाजजिदिति वाज। जित्। वाजन्त्वा।
त्वा सरिष्यन्तम्। सरिष्यन्तं वाजजितम्। वाजजितꣳ सम्। वा
जजितमिति वाज। जितम्। सम्मार्ज्मि। मार्ज्मि नमः। नमो देवेभ्यः
देवेभ्यः स्वधा। स्वधा पितृभ्यः। पितृभ्यः सुयमे। पितृभ्य ऽइति पितृ।
भ्यः। सुयमे मे। सुयमे ऽइति सु। यमे। मे भूयास्तम्। भूयास्तमस्कन्न ॥१४॥

म॰।७।।अस्कन्नमद्य।अद्यदेवेभ्यः॥ देवेभ्य॒ऽआज्यम्।आज्यꣳसम्।
सम्भ्रियासम्।भ्रियासमङ्घ्रिणा।अङ्घ्रिणाविष्णो।विष्णोमा।वि
ष्णो ऽइति विष्णो।मात्वा।त्वाव।अवक्रमिषम्।क्रमिषम्वसुमतीम्।
वसुमतीमग्ने।वसुमतीमितिवसुमतीम्।अग्नेते।तेछायाम्।
छायामुप।उपस्थेषम्।स्थेषम्विष्णोः॥विष्णोस्थानम्।स्थानमसि।
असि।असीतः।इत॒ऽइन्द्रः।इन्द्रोवीर्य्यम्।वीर्य्य मकृणोत्।अकृ
णोदूर्ध्वः।ऊर्ध्वोऽध्वरः।अध्वर॒ऽआस्थात्।आस्थात्।आस्थादित्या
स्थात्।८।।अग्नेर्वेः।वेर्होत्रम्।होत्रम्वेः।वे र्दूत्यम्।दूत्यमवता

ऋ०२ मू। अर्वे नां त्वाम। त्वान्र्वै वा पृथिवी। द्यावा पृथिवी ऽ अव। द्यावा पृ
॥१५॥ थिवी ऽ इति द्यावा पृथिवी। अव त्वम। त्वं द्यावा पृथिवी। द्यावा
पृथिवी स्विष्टकृत्। द्यावा पृथिवी ऽ इति द्यावा पृथिवी। स्विष्ट
कृद्देवेभ्यः। स्विष्टकृदिति स्विष्ट। कृत्। देवेभ्य ऽ इन्द्रः। इन्द्र आ
ज्येन। आज्येन हविषा। हविषाभूत्। भूत् स्वाहा। स्वाहा समा। स
ज्योतिषा। ज्योतिषा ज्योतिः। ज्योतिरिति ज्योतिः॥ ऽ॥ मयीदम्।
इदमिन्द्रः। इन्द्र ऽ इ. द्रियम्। इन्द्रियं दधातु। दधात्वस्मान्। अ
स्मान्त्रायः। रायो मघवानः। मघवानः सचन्ताम्। मघवान ऽ इति ॥१५॥

त्रिमघ।घोनः।सचन्तामस्माकम्।अस्माकंऽइति।सन्तु।सन्त्वाशिषः
आशिषस्सत्याः।आशिषऽइ   सत्या।शिषस्सत्यानः।नः।सन्तु।सन्त्वाशि
षऽआशिषऽउपहूता।आशिषऽइ सत्या।शिषऽउपहूता पृथिवी।उपहू
तेत्युपऽहूता।पृथिवीमाता।मातोप।उपमाम्।माम्पृथिवी।पृथिवीमा
ता।माताह्वयताम्।ह्वयतामग्निः।अग्निराग्नीध्रात्।आग्नीध्रात्स्वा
हा।स्वाहेति स्वाहा॥१०॥उपहूतो द्यौः।उपहूतऽइत्युपऽहूतः।द्यौष्पिता।
पितोप।उपमाम्।मां द्यौः।द्यौष्पिता।पिताह्वयताम्।ह्वयतामग्निः।अग्नि ५८
राग्नीध्रात्।आग्नीध्रात्स्वाहा।स्वाहेति स्वाहा॥प्रतिगृह्णामि।गृह्णाम्यु

क्र॰२ ग्नेः। अग्नेष्ट्वा। त्वास्येन। आस्येन प्राश्नामि। प्राश्नामि। अग्नेरास्येनम्॥३४॥ए
॥६७॥ तन्ते। ते देव। देव सवितः। सवितर्यज्ञम्। यज्ञम्प्र। प्राहुः। आहुर्बृहस्प क्र॰२
तये। बृहस्पतये ब्रह्मणे। ब्रह्मणे तेन। तेन यज्ञम्। यज्ञमव। अव
तेन। तेन यज्ञपतिम्। यज्ञपतिन्तेन। यज्ञपतिमिति यज्ञऽपतिम्। ते
न माम्। मामव। अवेत्यव॥५२॥ मनो जूतिः। जूतिर्जुषताम्। जुष
ताम् आज्यस्य। आज्यस्य बृहस्पतिः। बृहस्पतिर्यज्ञम्। यज्ञमिमम्।
इमन्तनोतु। तनोत्वरिष्टम्। अरिष्टं यज्ञम्। यज्ञं सम्। समिमम्। इ
मन्दधातु। दधात्विति दधातु। विश्वे देवासः। देवास ऽइह। इह माद ॥६७॥

यन्ताम्। मादयन्तामो३म्। ओ३म्प्र। प्रतिष्ठ। प्रतिष्ठेति प्रतिष्ठ ॥१३॥ एषा
ते। तेऽअग्ने। अग्ने समित्। समित्तया। समिदिति सम्ऽइत्। तया वर्द्ध
स्व। वर्द्धस्व च। चा च। आ च। च प्यायस्व। प्यायस्वेति प्यायस्व। वर्द्धि
षीमहि च। च वयम्। वयमा च। आ च। च प्यासिषीमहि। प्यासिषीमही
ति प्यासिषीमहि। ससृवा६सम्वाजजितम्। ससृवा६समिति स
सृऽवा६सम्। वाजजितमिति वाजऽजितम् ॥१४॥ अग्नीषोमयोरुज्जि
तिम्। उज्जितिमनु। उज्जितिमित्युत्ऽजितिम्। अनूज्जेषम्। उज्जे
षम्वाजस्य। वाजस्य मा। मा प्रसवेन। प्रसवेन प्र। प्रसवेनेति प्र। सवे

क्र० २

॥१७॥ नः । पोहामि ऽ ऊहाम्यग्नीषोमौ । अग्नीषोमौ तम् । तमप । अपनुद ता
म् । नुदताम्वाजस्य । वाजस्य प्रसवेन । प्रसवेनाप । प्रस
वेनेति प्र-सवेन । अपोहामि ऽ ऊहामीन्द्राग्न्योः । इन्द्राग्न्योरिन्द्राग्नी ।
इन्द्राग्नी वसुभ्यः । इन्द्राग्नी ऽ इतीन्द्राग्नी ॥१५॥ वसुभ्यस्त्वा । वसुभ्य
ऽ इति वसु-भ्यः । त्वा रुद्रेभ्यः । रुद्रेभ्य ऽ आदित्येभ्यः । आदित्येभ्यः स त्ये
मः । सञ्जानाथाम् । जानाथा द्यावापृथिवी । द्यावापृथिवी मित्राव
रुणौ । द्यावापृथिवी ऽ इति द्यावापृथिवी । मित्रावरुणौ त्वा । त्वा वृष्ट्या ।
वृष्ट्यावताम् । अवतामन्नु । अन्नु वर्षं । वयोऽकम् । अ० क्र० १०.२ ॥१८॥

कं०२ ॥१८॥ समि। भरत्रम्प्रेषः। एष न। नेनूः। इत्यन्तम्। तदे पचेनयाते। अपचेतयाता

ऽअग्नेः। अपचेतयाताऽइ  संपा। चेतयाते। अग्नेः। प्रियम्। प्रिय

म्पाथः। पाथोपि। अपीतम्। इत्यपिऽइतम्॥१७॥ सं। स्रवभागाः। स्रवा

सं। स्रवभागाऽइति स्रवऽभागाः। स्थेषा। इषा। बृहन्तः। बृहन्तः

प्रस्तरेष्ठाः। प्रस्तरेष्ठाः परिधेयाः। प्रस्तरेस्थाऽइति प्रस्तरे। स्थाः।

परिधेयाश्च। परिधेयाऽइति परिऽधेयाः। च देवाः। देवाऽइति देवाः।

इमाम्वाचम्। वाचमभि। अभि विश्वे। विश्वेगृणन्तः। गृणन्तऽआस

द्य। आसद्यास्मिन्। आसद्येत्याऽसद्य। अस्मिन्बर्हिषि। बर्हिषि माद ॥१८॥

पद्व मृ। मादयुद्धं स्वाहा। स्वाहा घाट। घाऽइति वाट्॥ ४८॥ घृता

चीस्थः। घृताची ऽइति घृताची। स्योधुर्यौ। धुर्यौ पातम्। पातं ई

सुम्ने। सुम्ने स्थः। सुम्ने ऽइति सुम्ने। स्थः सुम्ने। सुम्ने मा। माधृ

त्तम्। धृत्तमिति धत्तम्। यज्ञ नमः नमश्च। चनो। नऽ उप। उपच

च्युइत्तस्यं युइत्तस्यं त्रिवे। त्रिवेसम्। सं निष्ठस्व। निष्ठस्व स्विष्टे। स्वि

ष्टेमे। स्विष्टऽइति सुइष्टे। मेसम्। सन्निष्ठस्व। निष्ठस्वेति निष्ठस्व॥ ४९॥ ति

अग्नेदब्धायो। अदब्धायोशीतम्। अदब्धायोऽइत्यदब्ध। आयो।

अशीतनमपाहि। अशीतनमेत्यशीतनम। पाहिमा। मादिद्योः। दिद्योः प्र

का०२

॥३९॥ सिंसे। प्रसिंसे दुरिष्ठे। प्रसिंसा ऽ इति प्र। सिंसे। दुरिष्ठे दुरस्मन्नौ।
दुरिष्ठा ऽ इति दुः। इष्ठे। दुरस्मन्ना ऽ अविषन्न। दुरस्मन्ना ऽ इति दुः
अस्मन्नौ। अविषन्नं नः। पितुम्। पितुं कृणु। कृणु सुषदौ। सुषदा यो
नौ। सुसदेति सु। सदौ। यो नो स्वाहा। स्वाहा वा ऽ। वा ऽग्नये। अग्नये
सम्वेशपतये। सम्वेशपतये स्वाहा। सम्वेशपतय ऽ इति सम्वेशऽप
नये। स्वाहा सरस्वत्यै। सरस्वत्यै यशोभगिन्यै। यशोभगिन्यै स्वाहा।
यशोभगिन्या ऽ इति यशः। भगिन्यै। स्वाहेति स्वाहा॥ २०॥ वेदोसि।
असियेन। येन त्वम्। त्वं देव। देव वेद। वेद देवेभ्यः। देवेभ्यो वेदः। वेदो ॥१५॥

हो भवः। अर्वुभैस्तेन। तेन तमस्वमूमतस्म्वुदः। वुदो भूयाः। भूया
ऽइति भूयाः। देवा गातुविदः। गातुविदो गातुम्। गातुविद ऽइति
गातु। विदः। गातुं वित्वा। वित्वा गातुम्। गातुमित। इतेति। इतम
नसस्पते। पतऽइमम्। इमन्देव। देव यज्ञम्। यज्ञꣳ स्वाहा। स्वा
हा वाते। वाते धाः। धाऽइति धाः॥२१॥ सम्बर्हिः। बर्हिरङ्क्ताम्। २५
अङ्क्ताꣳ हविषा। हविषा घृतेन। घृतेनादित्यैः। आदित्यैर्वसु
भिः। वसुभिर्मरुद्भिः। वसुभिरिति वसु। भिः। मरुद्भिरिन्द्रः। मरु
द्भिरिति मरुत्। भिः। इन्द्रो विश्वदेवेभिः। विश्वदेवेभिरङ्क्ताम्।

ऋ०२
॥२७॥ विश्वदेवेभिरिति विश्वऽदेवेभिः। अक्रान्दिद्यमः। दिद्यमन्तस्मैः। नभोगच्छ
तु। गच्छतु स्वाहा। स्वाहेति स्वाहा॥२५॥ कस्त्वा। त्वा वि। विमु
ञ्चति। मुञ्चति सः। स कस्मै। कस्मै तस्मै। तस्मै पोषाय। पोषाय रक्ष
साम्। रक्षसां भागः। भागोऽसि। असीत्यसि॥२६॥ सम्वर्चसा। व
र्चसा पयसा। पयसा सम्। सन्तनूभिः। तनूभिरगन्महि। अगन्म
हि मनसा। मनसा सम्। सं शिवेन। शिवेनेति शिवेन। त्वष्टा सुद
त्रः। सुदत्रो वि। सुदत्र इति सुऽदत्रः। वि दधातु। दधातु रायः। रायो
ऽनु। अनु मार्ष्टु। मार्ष्टु तन्वः। तन्वो यत्। यद्विलिष्टम्। विलिष्टमिति॥२७॥

विलिखन्॥२४॥ दिवि विष्णुः। विष्णुर्व्यक्रंस्त। व्यक्रंस्त। अक्रंस्त
जागतेन। जागतेन छन्दसा। छन्दसा ततः। ततो निर्भक्तः। निर्भ
क्तोऽन्तरिक्षे। निर्भक्त इति निःऽभक्तः। अन्तरिक्षे त्रैष्टुभेन। त्रै
ष्टुभेन पृथिव्याम्। त्रैस्तुभेनेति त्रैस्तुभेन। पृथिव्यां गायत्रेण। गा
यत्रेणास्मात्। अस्मादन्नात्। अन्नादस्यै। अस्यै प्रतिष्ठायाः।
प्रतिष्ठाया अगन्म। प्रतिष्ठाया इति प्रतिऽस्थायाः। अगन्म
स्वः। स्वः सम्। स्वरिति स्वः। सं ज्योतिषा। ज्योतिषाभूम। अभूमेत्य
भूम॥२५॥ स्वयम्भूरसि। स्वयम्भूरिति स्वयम्ऽभूः। असि श्रेष्ठः। श्रे

क्र०२

॥२७॥ ष्ठो रश्मिः । रश्मिर्वर्चोदाः । वर्चोदा असि । वर्चोदा इति वर्चःऽदाः । असि
वर्चः । वर्चो मे । मे देहि । देहीति देहि । सूर्यस्यावृतम् । आवृतमन्
आवृतमित्याऽवृतम् । अन्वावर्ते । आवर्त्ते । वर्त्ते मे ॥२८॥ अग्ने ग्रह
पते । ग्रहपते सुग्रहपतिः । ग्रहपत इति ग्रहऽपते । सुग्रहपतिस्त्व
यो । सुग्रहपतिरिति सुऽग्रहपतिः । त्वयाग्ने । अग्ने हम् । अहङ्ग्रहप
तिना । ग्रहपतिना भूयासम् । ग्रहपतिनेति ग्रहऽपतिना । भूयास ँ
सुग्रहपतिः । सुग्रहपतिस्त्वम् । सुग्रहपतिरिति सुऽग्रहपतिः । त्वम्म
या । मयाग्ने । अग्ने ग्रहपतिना । ग्रहपतिना भूयाः । ग्रह पतिनेति ग्रहऽ ॥२९॥

हा। पत्निना। मृत्याऽ इति मृत्याः। अस्य। रिणौ। नौ। गार्हपत्यानि।
।गार्हपत्यानि सन्तु। गार्हपत्यानीति गार्ह॰पत्यानि। सन्तु। शतम्।
शतं२६ हिमाः। हिमाऽ अचारिषम्। अचारिषन्तत्। तत्। अशकम्। अशु २३
कन्तन्तत्। तन्मे। मे। राधि। अराधीदम्। इदम्। अहम्। अहंयः। यऽएव। ए
वास्मि। अस्मि सः। सोऽस्मि। अस्मीति अस्मि। २७। अग्नये कव्यवा
हनाय। कव्यवाहनाय स्वाहा। कव्य वाहनायेति कव्य॰वाह
२५ नाय। स्वाहा। सोमाय। सोमाय पितृमते। पितृमते स्वाहा। पितृमत
ऽइति पितृ॰मते। स्वाहेति स्वाहा। अपहताऽ असुराः। अपहताऽइ

क०२

॥२२॥ सपं।हताः।असुराः।रक्षांऽसि।रक्षांऽसि।वेदिषदः।वेदिषदो वे।
वेदिसद ऽइति वेदि।सदः।२९।ये।रूपाणि।रूपाणि प्रतिमुञ्चमा
नाः।प्रतिमुञ्चमाना ऽअसुराः।प्रतिमुञ्चमाना ऽइति प्रति।मु
ञ्चमानाः।असुराः।सन्तः।सन्तः स्वधया।स्वधया चरन्ति।च
रन्तीति चरन्ति।पराऽपुरः।निऽपुरः।पराऽपुर ऽइति परा।पुरः।निपुरो ये।
निपुर ऽइति नि।पुरः।ये।भरन्ति।भरन्त्यग्निः।अग्निष्टान्।तान् लो
कात्।लोकात् प्र।प्रणुदाति।नुदात्यस्मात्।अस्मादित्यस्मात्।
॥३०॥ अत्र।पितरः।पितरो मादयध्वम्।मादयध्वं यथा।भागम्। ॥२२॥

यथाभागमावृषायध्वम् । यथाभागमिति यथा । भागम् । आवृषाय
ध्वम् । वृषयध्वमिति वृष । यध्वम् । अमीमदन्त पितरः । पितरो यथा
भागम् । यथाभागमावृषायिषत । यथाभागमिति यथा । भागम् ।
आवृषायिषत । आवृषायिषतेत्या वृषायिषत ।। ३० ।। नमो वः । वः
पितरः । पितारोरसाय । रसायशोषाय । शोषायजीवाय । जीवाय
स्वधायै । स्वधायै घोराय । घोराय मन्यवे । मन्यवे नमः । नमो वः । वः
पितरः । पितरः पितरः । पितरो नमः । नमो वः । वो गृहान् । गृहान्नः ।
नः पितरः । पितरो दत्त । दत्त सतः । सतो वः । वः पितरः । पितरो देष्म ।

ऋ०२ ॥२३॥ देष्मैतत्। एतद्वः। वः पितरः। पितरो वासः। वासऽआधत्त ॥३२॥
आधत्ताधत्त पितरः। पितरो गर्भम्। गर्भं कुमारम्। कुमारं पुष्कर
स्रजम्। पुष्करस्रजमिति पुष्करऽस्रजम्। यथेह। इह पुरुषः। पुरुषो
ऽसत्। असदित्यसत् ॥३३॥ ऊर्जं वहन्तीः। वहन्तीरमृतम्। अमृ
तं घृतम्। घृतं पयः। पयः कीलालम्। कीलालं परिस्रुतम्।
परिस्रुतमिति परिऽस्रुतम्। स्वधा स्थ। स्थ तर्पयत। तर्पयत मे।
मे पितॄन्। पितॄनिति पितॄन् ॥३४॥ ॥ इति वाजसनेयि क्रमसंहि
तायां द्वितीयोऽध्यायः ॥२॥ समिधाग्निम्। समिधेति सम्ऽइधा। अग्निं ॥२३॥

ग्निं दुवस्यत । दुवस्यत घृतैः । घृतैर्बोधयत । बोधयतातिथिम् । अ
तिथिमित्यतिथिम् । आस्मिन् । अस्मिन्हव्या । हव्या जुहोतन । जुहोतने हो
ति जुहोतन ॥१॥ सुसमिद्धाय शोचिषे । सुसमिद्धायेति सुऽसमिद्धाय ।
शोचिषे घृतम् । घृतं तीव्रम् । तीव्रं जुहोतन । जुहोतनेति जुहोतन ।
अग्नये जातवेदसे । जातवेदस इति जातऽवेदसे ॥२॥ तं त्वा । त्वा समि
२ द्भिः । समिद्भिरङ्गिरः । समिद्भिरिति समित्ऽभिः । अङ्गिरो घृतेन । घृतेन
वर्धयामसि । वर्धयामसीति वर्धयामसि । बृहच्छोच । शोचा यविष्ठ्य ।
यविष्ठ्येति यविष्ठ्य ॥३॥ उप त्वा । त्वाग्ने । अग्ने हविष्मतीः । हविष्मती

ऋ०३।
॥२३॥ घृताचीः। घृताचीर्यन्तु। यन्तु हर्यत। हर्यतेति हर्यत। जुषस्व समिधः।
समिधो मम। समिध इति सम्ऽइधः। ममेति मम॥४॥ भूर्भुवः। भुवः
स्वः। स्वर्द्यौरिव। द्यौरिव भूम्ना। द्यौरिवेति द्यौःऽइव। भूम्ना पृथिवी
व। पृथिवीव वरिम्णा। पृथिवीवेति पृथिवीऽइव। वरिम्णेति वरि
म्णा। तस्यास्ते। ते पृथिवि। पृथिवि देवयजनि। देवयजनि पृष्ठे।
देवयजनीति देवऽयजनि। पृष्ठेऽग्निम्। अग्निमन्नादम्। अन्नाद
मन्नाद्याय। अन्नादमित्यन्नऽअदम्। अन्नाद्यायादधे। अन्नाद्या
येत्यन्नऽअद्याय। आ दधे। दधऽइति दधे॥५॥ आयम्। अयं गौः। गौः॥२४॥

पृश्निः। पृश्निरक्रमीत्। अक्रमीदसदत्। असदन्मातरम्। मातरं पुरः।
पुरऽइति पुरः। पितरं च। च प्रयन्। प्रयन्त्स्वः। प्रयन्निति प्रऽयन्। स्वरिति
स्वः॥६॥ अन्तश्चरति। अन्तरित्यन्तः। चरति रोचना। रोचनास्य। अ
स्य प्राणात्। प्राणादपानती। अपानतीत्यपऽअनती। व्यख्यत्। अख्य
न्महिषः। महिषो दिवम्। दिवमिति दिवम्॥७॥ त्रिंशद्धाम। धाम वि
विराजति। राजति वाक्। वाक्पतङ्गाय। पतङ्गाय धीयते। धीयतऽइ
ति धीयते। प्रति वस्तोः। वस्तोरहः। अहर्द्युभिः। द्युभिरिति द्युऽभिः॥८॥
अग्निर्ज्योतिः। ज्योतिर्ज्योतिः। ज्योतिरग्निः। अग्निः स्वाहा। स्वाहा

क्र० ३
॥२५॥ सूर्य्यँ॥ सूर्य्यो ज्योतिँ॥ ज्योतिर्ज्योतिँ॥ ज्योतिः सूर्य्यँ॥ सूर्य्यः स्वाहा। स्वा
हेति स्वाहा। अग्निर्वर्च्चँ॥ वर्च्चो ज्योतिँ॥ ज्योतिर्वर्च्चँ॥ वर्च्चः स्वाहा। स्वा
हा सूर्य्यँ॥ सूर्य्यो वर्च्चँ॥ वर्च्चो ज्योतिः। ज्योतिर्वर्च्चँ॥ वर्च्चः स्वाहा। स्वा
हेति स्वाहा। ज्योतिः सूर्य्यँ॥ सूर्य्यः सूर्य्यँ॥ सूर्य्यो ज्योतिँ॥ ज्योतिः स्वाहा॥ स्वा
हेति स्वाहा॥ ९॥ सजूर्देवेन। सजूरिति स। जूः। देवेन सवित्रा। सवित्रा
सजूः। सजूरात्र्या। सजूरिति स। जूः। रात्र्येन्द्रवत्या। इन्द्रवत्येतीन्द्र। वत्या॥
जुषाणोऽअग्निः। अग्निर्वेतु। वेतु स्वाहा। स्वाहेति स्वाहा। उषसा सूर्य्यँ॥
सूर्य्योऽइति सूर्य्यः॥ १०॥ उप प्रयन्तोऽअध्वरम्। उपप्रयन्तऽइ युप। प्र ॥२५॥

यन्तः। अप्तुरम्मन्त्रम्। मन्त्रम्वोचेम। वोचेमाग्नये। अग्नयऽइत्यग्नये। आ
रेऽअस्मे। अस्मेच। अस्मेऽइत्यस्मे। चशृण्वते। शृण्वतऽइतिशृण्वते।
॥३३॥ अग्निर्मूर्द्धा। मूर्द्धा दिवः। दिवः ककुत्। ककुत्पतिः। पतिः पृथिव्याः।
पृथिव्याऽअयम्। अयमित्ययम्। अपाꣳरेताꣳसि। रेताꣳसिजिन्व
ति। जिन्वतीतिजिन्वति॥३४॥ उभावाम्। वामिन्द्राग्नी। इन्द्राग्नीऽआ
हुवध्यै। इन्द्राग्नीऽइतीन्द्राग्नी। आहुवध्याऽउभा। आहुवध्याऽइत्याहु
वध्यै। उभाराधसः। राधसःसह। सहमादयध्यै। मादयध्याऽइतिमा
दयध्यै। उभादातारौ। दातारा विषाम्। इषाꣳरयीणाम्। रयीणामुभा।

का०३
॥२५॥ उभा वाजस्य। वाजस्य सातये। सातये हुवे। हुवे वाम्। वामिति वाम्।
॥१३॥ अयं ते। ते योनिः। योनिर्ऋत्वियः। ऋत्वियो यतः। यतो जातः।
जातो ऽअरोचथाः। अरोचथा ऽइत्यरोचथाः। तं जानन्। जानन्नग्ने।
अग्न ऽआ रोह। आ रोह। रोहाथ। अथा नः। नो वर्द्धय। वर्द्धया
रयिम्। रयिमिति रयिम्॥१४॥ अयमिह। इह प्रथमः। प्रथमो धा
यि। धायि धातृभिः। धातृभिर्होता। धातृभिरिति धातृऽभिः। हो
ता यजिष्ठः। यजिष्ठो ऽअध्वरेषु। अध्वरेष्वीड्यः। ईड्य ऽइतीड्यः। य
मप्नवानः। अप्नवानो भृगवः। भृगवो विरुरुचुः। विरुरुचुर्वनेषु ॥२५॥

शु। विरुरुक्षुरिति वि। रुरुक्षुः। वनेषु चित्रम्। चित्रम्विभुम्। विभुम्विभुं वि
शे। विशे। विभुमिति वि। भुम्। विशेविश ऽइति विशे। विशे॥ १५॥
अस्य प्रत्नाम्। प्रत्नामनु। अनु द्युतम्। द्युतं शुक्रम्। शुक्रं दुदुह्रे।
दुदुह्रे ऽअह्रयः। अह्रय ऽइति सह्रयः। पयः। पयः सहस्रसाम्। सहस्रसा
मृषिम्। सहस्रसामिति सहस्र। साम्। ऋषिमित्यृषिम्॥ १६॥ तनू
नूपा ऽअग्ने। तनूपा ऽइति तनू। पाः। अग्नेऽसि। असि तनुवम्। तनुवम्
मे। मे पाहि। पाह्यायुर्दाः। आयुर्दा ऽअग्ने। आयुर्दा ऽइत्यायुः।
दाः। अग्नेऽसि। अस्यायुः। आयुर्मे। मे देहि। देहि वर्चोदाः। वर्चोदा ऽ

